# रसविचारः

- उपनिषत्सु रसपदस्य प्रयोगः ।
- 'रसो वै सः | रसं ह्येवायं लब्ध्वानन्दो भवति'।
- रसो नाम तृप्तिहेतुरानन्दकरो मधुराम्लादिः प्रसिद्धो लोके ।
- आनन्दहेतुरूपार्थे रसपदं व्यवहृतम् ।

# आलङ्कारिकाणां मतम्

- काव्येन नाट्येन वा जायमानः अलौकिकः आनन्दः रसः  इति ।
- उपलभ्यमानेषु लक्षणग्रन्थेषु रसवादिषु भरतमुनिः आदिमः ।

यथा-

- तत्र रसानेव तावदभिव्याख्यास्यामः ।
- न हि रसादृते कश्चिदर्थः प्रवर्तते ।

# भरतमुनेः मतम्

विभावानुभावव्यभिचारिसंयोगात् रसनिष्पत्तिः ।

# नवरसाः

- शृङ्गार-हास्य-करुण-रौद्र-वीर-भयानकाः । बीभत्स-अद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः ।।
- नवमो रसः 'शान्तरसः' इति केचन ।
- एषां क्रमशः रति-हास-शोक-क्रोध-उत्साह-भय-जुगुप्सा-विस्मय-शमाः स्थायिभावाः भवन्ति ।
- विभावादिभिः सहृदयहृदये अभिव्यक्तः रत्यादिरूपस्थायिभावः एव रसः इति ।

# काव्येषु रसः

- बहुभिरालङ्कारिकैः रसवादमवलम्ब्य 'रस एव आत्मा' इति अमंसत ।
- काव्यं हि आनन्दानुभूतिसाधनम् ।
- आनन्दानुभूतिश्च रसास्वादमूला ।
- रसास्वादनादेव आनन्दावाप्तिः ।

रसो ब्रह्मानन्दसहोदरः ।

